पल्लवसङ्ख्या - ३५

# प्रस्तावना

## (प्रथममुद्रणस्य)

क्रियापदानां भूत-भविष्यद्–वर्तमानकाल-रूपाणाम् अभ्यासार्थं सज्जीकृता अस्ति एषा कालबोधिनी । इदमिदानीं प्राप्तसंस्कृतपरिचयाः प्रविष्टसम्भाषणशिबिराः अस्य पुस्तकस्य अधिकारिणः । अतः तादृशान् अभ्यासिनः एव मनसि निधाय अत्यन्तं सरलाः अपि अभ्यासाः अत्र योजिताः सन्ति ।

लङ्-लृट्-लट् - इत्येते त्रयः लकाराः एव अत्र स्वीकृताः । भूतकालार्थे व्यावहारिक-सौकर्य-दृष्ट्या भूतकृदन्तरूपाणि (क्तवतु-प्रत्ययान्तानि) अपि अत्र स्वीकृतानि । यद्यपि लङ्लकाररूपस्य क्तवतुप्रत्ययान्तस्य च शास्त्रीयः अर्थभेदः अस्ति, तथापि अत्र तु व्यावहारिकदृष्ट्या तयोः अविशेषेण प्रयोगः कृतः अस्ति ।

आकारेण लघु अपि एतत् पुस्तकं कालत्रयस्य अभ्यासकरणे भाषाभ्यासिनाम् अधिकं साहाय्यं निश्चयेन करिष्यति इति वयं विश्वसिमः ।

एतस्य पुस्तकस्य मुखपुटविन्यासं श्रीमती नन्दादेवी कृतवती । मुद्रणं तु स्प्यान्मुद्रणालयस्य, अक्षरसंयोजनं श्रीराममुद्रणालयस्य । कलाकारिण्यै, अक्षरसंयोजकाय, मुद्रकाय तत्सहकारिबन्धुभ्यः च कृतज्ञताः समर्प्यन्ते ।

श्रीमुख सं ।। मार्गशीर्षकृष्णनवमी **– प्रकाशकः**
६.१.१९९४

## (तृतीयमुद्रणस्य)

एतस्य तृतीयमुद्रणं यत् प्रचलति तत् महते सन्तोषाय । एतत्सन्दर्भे सहकृतवतः सर्वान् कृतज्ञतापूर्वकं स्मरामः ।

प्रमाथि सं ।। निजज्येष्ठशुक्ल-एकादशी **– प्रकाशकः**
२४.०६.१९९९

# १. वर्तमानकालः

१.१


छात्रः **पठति** ।


चित्रकारः **लिखति** ।


युवकः **गच्छति** ।


बालकः **धावति** ।


मार्जालः **पिबति** ।


वृद्धः **पश्यति** ।


पुरुषः **उत्तिष्ठति** ।


गायकः **गायति** ।


उन्मत्तः **हसति** ।


बालिका **क्रीडति** ।


महिला **प्रक्षालयति** ।


वृद्धः **खादति** ।

***क्रियापदानां वर्तमानकालरूपाणि अत्र सन्ति ।***

१.२. एतेषां वाक्यानां वचनपरिवर्तनं कुर्वन्तु –
(एकवचनतः बहुवचनं प्रति)

यथा - *छात्रः पठति । छात्राः पठन्ति ।*

१. चित्रकारः लिखति ।
२. युवकः गच्छति ।
३. बालकः धावति ।
४. मार्जालः पिबति ।
५. वृद्धः पश्यति ।
६. पुरुषः उत्तिष्ठति ।
७. गायकः गायति ।
८. उन्मत्तः हसति ।
९. बालिका क्रीडति ।
१०. महिला प्रक्षालयति ।
११. वृद्धा खादति ।

१.३. एतेषां सर्वेषां वाक्यानां पुरुषपरिवर्तनं कुर्वन्तु –
(प्रथमपुरुषतः उत्तमपुरुषं प्रति)

यथा - *छात्रः पठति । अहं पठामि ।*

१.४. एतेषां प्रश्नानाम् उत्तरं वदतु ।
(आवरणे विद्यमानस्य शब्दस्य साहाय्येन)

यथा - *भवान्/भवती विद्यालयं गच्छति वा ? (आम्)*
*आम्, अहं विद्यालयं गच्छामि ।*

१. भवान्/भवती पठति वा ? ( न )
२. भवान्/भवती पेटिकां नयति वा ? ( न )

३. भवान्/भवती प्रश्नं पृच्छति वा ? ( आम् )
४. भवान्/भवती संस्कृतं जानाति वा ? ( आम् )
५. भवान्/भवती योगासनं करोति वा ? ( आम् )
६. भवान्/भवती चित्रगीतं शृणोति वा ? ( न )
७. भवान्/भवती लेखनीं ददाति वा ? ( न )
८. भवान्/भवती मधुरम् इच्छति वा ? ( आम् )
९. भवान्/ भवती आसन्दे उपविशति वा ? ( न )
१०. भवान्/भवती नूतनं वाहनं क्रीणाति वा ? ( आम् )

[ *सूचना - 'वा ' इति स्थाने ' किम् '*
*इत्यस्य प्रयोगः अपि कर्तुं शक्यते* ]

१.५. **एतेषाम् उत्तराणां प्रश्नवाक्यानि वदतु —**

**यथा -** *न, वयं क्रिकेट् न क्रीडामः ।*
*भवन्तः/भवत्यः क्रिकेट् क्रीडन्ति वा ?*

१. आम्, वयं महामस्तकाभिषेकार्थं गच्छामः ।
२. आम्, वयं गृहपाठं लिखामः ।
३. न, वयम् अद्य अत्र न तिष्ठामः ।
४. आम्, वयं प्रतिदिनं कार्याणि कुर्मः ।
५. न, वयं प्रातःकाले दूरदर्शनं न पश्यामः ।
६. आम्, वयं कथाः पठामः ।
७. आम्, वयं सम्यक् स्मरामः ।
८. आम्, वयं भरतनाट्यम् इच्छामः ।
९. आम्, वयं तन्त्रीवार्तां प्रेषयामः ।
१०. न, वयम् अधिकं कटु न खादामः ।

१.६. **आवरणे विद्यमानस्य क्रियापदस्य उचितं रूपम् उपयुज्य पूर्णं वाक्यं वदतु —**

**यथा -** *छात्राः संस्कृतं ---------- (जानाति)*
*छात्राः संस्कृतं जानन्ति ।*

१. वैद्याः चिकित्सां ----------- (करोति)
२. वयं वस्त्राणि ------------ (क्रीणाति)
३. भगिन्यः भावगीतानि --------- (शृणोति)
४. वयं प्रयत्नेन ज्ञानं ----------- (प्राप्नोति)
५. वानराः फलानि ------------- (गृह्णाति)
६. वयं देशसेवां ------------ (करोति)
७. एते पुस्तकानि ----------- (ददाति)
८. वयं तरणं कर्तुं ------------ (शक्नोति)
९. बालकाः उच्चैः ----------- (रोदिति)
१०. वयं चित्रं लेखितुं ---------- (शक्नोति)

१.७. **आवरणे विद्यमानयोः क्रियापदरूपयोः मध्ये उचितं रूपम् उपयुज्य पूर्णं वाक्यं वदतु -**

**यथा -** *ग्राहकाः तण्डुलं - (क्रीणान्ति, क्रीणन्ति)*
*ग्राहकाः तण्डुलं क्रीणन्ति ।*

१. वयं संस्कृताध्ययनं - (करोमः, कुर्मः)
२. के अपि प्रयत्नेन विना फलं न - (प्राप्नोन्ति, प्राप्नुवन्ति)
३. वयम् आकाशवाणी-वार्तां - (शृणुमः, शृणोमः)
४. वयं क्रीडितुं कन्दुकं - (गृह्णामः, गह्णीमः)
५. चोराः अन्यान् वञ्चयितुं - (शक्नोन्ति, शक्नुवन्ति)
६. वयं निर्धनेभ्यः वस्त्राणि - (दद्मः, ददामः)

७. ताः क्रीडावार्ता न - (शृण्वन्ति, शृणुवन्ति)
८. पतामः चेत् अपि वयं न - (रोदिमः, रुदिमः)
९. वयं कीर्तिं - (प्राप्नुमः, प्राप्नोमः)
१०. ते सर्वदा स्यूतं - (गृह्णान्ति, गृह्णन्ति)

# २. भूतकालः



२.१. इयम् आकाशवाणी । सम्प्रति वार्ताः श्रूयन्ताम् । प्रवाचकः श्रीनिवासमूर्तिः ।

अद्य देहलीनगरे निर्वाचनम् **अभवत्**। सामान्यतः (षष्टिप्रतिशतं) ६०% मतदानं **प्राचलत्**। नगरस्य केषुचित् भागेषु वृष्टिः **आसीत्**। अतः तत्र बहवः जनाः मतदानं न **अकुर्वन्**। एकस्मिन् मतक्षेत्रे कोलाहलः **अभवत्**। तत्र आरक्षकाः १० जनान् **अगृह्णन्**। किञ्चित्-कालानन्तरं तान् बन्धमुक्तान् **अकुर्वन्**।

इङ्गलण्ड्देशस्य अध्यक्षः अद्य भारतम् **आगच्छत्।** तेन सह केचन मन्त्रिणः अपि **आगच्छन्।** देहलीनगरे विमानस्थानके प्रधानमन्त्री तेषां स्वागतम् **अकरोत्।** अनन्तरम् आगताः विदेशीयाः सर्वे राष्ट्रपतिभवने राष्ट्रपतिना **अमिलन्।** संसद्भवनमपि ते **अपश्यन्।** रात्रौ अनौपचारिक-कार्यक्रमे ते भारतीयं शास्त्रीयसङ्गीतम् **अशृण्वन्।**

भारतीय-विज्ञान-मन्दिरस्य वार्षिकोत्सवसन्दर्भे भाषमाणः डा॥ राजेन्द्रकुमारः **अवदत्** यत् प्राचीन-भारतीय-विज्ञानिनः अनेकान् अमूल्यान् ग्रन्थान् **अलिखन्,** तेषु अनेकान् वैज्ञानिकान् अंशान् **न्यरूपयन्,** किन्तु ते प्रचारं न **ऐच्छन्।** अतः ते विषयाः लुप्ताः **अभवन्।** अद्य तेषाम् अध्ययनं पुनरपि करणीयम् अस्ति इति।

कल्कत्तानगरे प्रवृत्तायां भारत-पाकिस्थान-क्रिकेट्-क्रीडायां भारतस्य जयः **अभवत्।** उत्साहमये वातावरणे भारतीयाः क्रीडालवः सम्यक् **अक्रीडन्।** इति वार्ताः।

**एतस्यां वार्तायां विद्यमानानि स्थूलाक्षरैः मुद्रितानि पदानि क्रियापदानां भूतकालरूपाणि। (लङ्)**

२.२. **एतेषां वाक्यानां कालपरिवर्तनं कुर्वन्तु - (वर्तमानकालतः - भूतकालं प्रति)**

**यथा -** *लीला शालां गच्छति।*
*लीला शालाम् अगच्छत्।*

१. विजया गीतं गायति।
२. नागराजः वाक्यं वदति।
३. अरविन्दः मित्राय पत्रं लिखति।
४. सुधा कार्यालयकार्यं करोति।

५. शङ्करः कदलीफलं खादति ।
६. आपणिकः वस्तूनि यच्छति ।
७. जगन्मोहनः कन्दुकेन क्रीडति ।
८. विष्णुदत्तः शिलाखण्डं क्षिपति ।
९. शिष्यः मातरं दृष्ट्वा हसति ।
१०. नागराजः चित्रं पश्यति ।

| अ | ब |
|---|---|
| बालकः पाठम् **अपठत्** । | बालकाः पाठम् **अपठन्** । |
| बालिका गीतम् **अगायत्** । | बालिकाः गीतम् **अगायन्** । |
| छात्रः मार्गे **अधावत्** । | छात्राः मार्गे **अधावन्** । |

**अत्र 'ब' विभागे विद्यमानेषु वाक्येषु क्रियापदानां बहुवचनरूपाणि प्रयुक्तानि सन्ति ।**

**२.३. एतेषां वाक्यानां वचनपरिवर्तनं कुर्वन्तु -**
**(एकवचनतः बहुवचनं प्रति)**

**यथा -** *कृषिकः ग्रामे अवसत् ।*
*कृषिकाः ग्रामे अवसन् ।*

१. एषः उच्चैः अहसत् ।
२. सः नाटकम् अपश्यत् ।
३. महिला आभरणम् अधरत् ।
४. सैनिकः देशम् अरक्षत् ।
५. भवान् कार्यम् अकरोत् ।
६. भवती विषयम् असूचयत् ।
७. बालकः मार्गे अपतत् ।

८. कर्मकरः पेटिकाम् अनयत् ।
९. भक्तः देवम् अनमत् ।
१०. अश्वः शीघ्रम् अधावत् ।

२.४. एतेषां वाक्यानां वचनपरिवर्तनं कुर्वन्तु —

(एकवचनत: बहुवचनं प्रति & बहुवचनत: एकवचनं प्रति)

यथा - *अहं कथाम् अपठम् ।*
*वयं कथाम् अपठाम ।*

१. अहं श्लोकम् अवदम् ।
२. अहं फलरसम् अपिबम् ।
३. अहं विपणिम् अगच्छम् ।
४. वयं हिमालयम् अपश्याम ।
५. अहं नदीम् अतरम् ।
६. अहं किमपि न अचोरयम् ।
७. वयं धनम् अगणयाम ।
८. अहं मित्राय पत्रम् अलिखम् ।
९. अहं गृहं प्रति वस्तूनि अनयम् ।
१०. वयं क्रीडाङ्गणे अक्रीडाम ।

| | |
|---|---|
| अहम् अवदम् । | वयम् अवदाम । |
| अहम् अतिष्ठम् । | वयम् अतिष्ठाम । |
| अहम् अगायम् । | वयम् अगायाम । |

२.५. गोपिनाथः ग्रामं गतवान् आसीत्। ग्रामे सः किं किं कृतवान् इति अत्र लिखितम् अस्ति।

१. गोपीनाथः ग्रामम् अगच्छत्।

२. सः तत्र मातुलस्य गृहे अवसत्।

३. सः बान्धवैः अमिलत्।

४. सर्वैः बालकैः सह अक्रीडत्।

५. सः ग्रामपार्श्वे विद्यमानां नदीम् अपश्यत्।

६. नद्याः जलम् अपिबत्।

७. मित्रैः सह नदीम् अतरत्।

८. अनेकविधानि फलानि अखादत्।

९. अत्यन्तं सन्तोषेण कालम् अनयत्।

१०. मासान्ते नगरं प्रत्यागच्छत्।

११. अनन्तरं मातुलाय पत्रम् अलिखत्।

२.६. इदानीम् आत्मानं गोपीनाथं मत्वा, भवान् ग्रामे किं किं कृतवान् इति वदतु —

**यथा** - *१. अहं ग्रामम् अगच्छम्।*

*२. अहं तत्र मातुलस्य गृहे अवसम्।*

एवं सर्वाणि वाक्यानि वदतु।

**अत्र सर्वत्र भूतकालार्थे लङ् - लकारस्य प्रयोगः कृतः अस्ति। एतस्य स्थाने भूतकृदन्तरूपस्य (क्तवतु-प्रत्ययान्तस्य) प्रयोगः सरलः सुकरः च।**

२.७. रामगोपालः मद्रास्नगरं गत्वा इदानीं प्रत्यागतवान् अस्ति। पित्रा सह सः वार्तालापं करोति —



पिता — भवान् मद्रास्नगरं कदा प्राप्तवान् ?

रामगोपालः — बुधवासरे प्रातःकाले सप्तवादने प्राप्तवान् ।

पिता — अनन्तरं भवान् किं किं कृतवान् ?

रामगोपालः — अहं प्रथमं मित्रस्य गृहं गतवान् । तत्रैव स्नानं कृतवान् । उपाहारमपि स्वीकृतवान् । ततः त्यागराजनगरं गतवान् ।

पिता — भवान् एकः एव गतवान् वा ?

रामगोपालः — नैव, मम स्नेहितः मां तत्र नीतवान् । तत्र सभाभवने कार्यक्रमः आयोजितः आसीत् । अहं तत्र मम लेखनं पठितवान् ।

पिता — अनन्तरम्__ ?

**रामगोपालः** – अध्यक्षः मां **प्रशंसितवान्**। मम योजनाम् **अङ्गीकृतवान्**। अग्रिमसम्मेलने भागं वोढुं मां **प्रार्थितवान्**। कार्यक्रमानन्तरं सः एव मां रेल्स्थानकं **प्रापितवान्**।

अत्र भूतकृदन्तस्य एकवचनरूपाणि (पुंल्लिङ्गे) प्रयुक्तानि सन्ति।

२.८. **वृद्धस्य उपदेशः**

एकः वृद्धः। तस्य पञ्च पुत्राः। ते सर्वे अपि अलसाः। कार्यम् एव न कुर्वन्ति। वृद्धः बहुवारम् उपदेशं कृतवान्। परन्तु ते न श्रुतवन्तः।

वृद्धस्य मरणकालः आगतः। तदा सः पुत्रान् उक्तवान् - "पुत्राः ! मम क्षेत्रे कुत्रापि निधिः अस्ति। भवन्तः क्षेत्रं खनन्तु। तं निधिं प्राप्नुवन्तु" इति। वृद्धः दिवङ्गतः।

वृद्धस्य मरणानन्तरं पुत्राः क्षेत्रं **गतवन्तः**। क्षेत्रे सर्वत्र खननं **कृतवन्तः**। अन्विष्टवन्तः च। परन्तु निधिः न लब्धः। अनन्तरं ते **चिन्तितवन्तः** - "कथमपि वयं क्षेत्रस्य खननं **कृतवन्तः**। इदानीं कर्षणं कुर्मः" इति। ते क्षेत्रं **कृष्टवन्तः**। बीजानि **उप्तवन्तः**।

अल्पेन एव कालेन सस्यानि प्रवृद्धानि। कालान्तरे ते अधिकं धान्यं **प्राप्तवन्तः**। तत् ते **विक्रीतवन्तः**, बहु धनं **सम्पादितवन्तः** च। तदा ते पितुः वचनं **स्मृतवन्तः**। तस्य अभिप्रायः कः आसीत् इति **ज्ञातवन्तः**।

भूतकृदन्तस्य बहुवचनरूपाणि (पुंल्लिङ्गे) अत्र प्रयुक्तानि सन्ति।

२.९. **एतेषां वाक्यानां वचनपरिवर्तनं करोतु - (एकवचनतः बहुवचनं प्रति)**

यथा - *शिक्षकः छात्रं पाटितवान् ।*
*शिक्षकाः छात्रं पाठितवन्तः ।*

१. शिक्षकः गृहपाठं लिखितवान् ।
२. पण्डितः ग्रन्थं परिशीलितवान् ।
३. एषः बान्धवान् आमन्त्रितवान् ।
४. सः पत्रं प्रेषितवान् ।
५. भवान् संस्कृतं ज्ञातवान् ।
६. नटः जनानां मनः आकृष्टवान् ।
७. वानरः फलं खादितवान् ।
८. अहं विषयं स्मृतवान् ।
९. प्रवाचकः वार्तां पठितवान् ।
१०. चित्रकारः चित्रं दर्शितवान् ।

२.१०.

| | | |
|---|---|---|
| विजया | – | अम्ब ! अहम् **आगतवती** । |
| अम्बा | – | विजये ! किमर्थं विलम्बः ? |
| विजया | – | अद्य विद्यालये कोऽपि कार्यक्रमः आसीत् । अहं तत्र भागं **गृहीतवती** । |
| अम्बा | – | भवती किं **कृतवती** ? |
| विजया | – | अहं गीतं **गीतवती** । |
| अम्बा | – | एवं वा ? अध्यापिका किम् **उक्तवती** ? |
| विजया | – | सा सर्वान् बालकान् **श्लाघितवती** । किन्तु रमा कोलाहलं **कृतवती** । अतः अध्यापिका तां **तर्जितवती** । तदा रमा **रुदितवती** । |



अम्बा — अनन्तरम्... ?

विजया — परह्यः विद्यालये स्पर्धा आसीत् किल ? नलिनी तत्र जयं प्राप्तवती। मुख्याध्यापिका तस्यै पारितोषिकं दत्तवती। नलिनी सर्वेभ्यः पारितोषिकं दर्शितवती। अनन्तरं गृहं नीतवती।

अम्बा — भवतु, विलम्बः किमर्थम् ?

विजया — तावत्पर्यन्तम् अहं घटीम् एव न दृष्टवती। समयमेव न ज्ञातवती। अतः विलम्बः जातः।

अम्बा — एवं वा ? अहं मधुरं कृतवती। ददामि, भवती खादतु।

**भूतकृदन्तस्य एकवचनरूपाणि (स्त्रीलिङ्गे) अत्र प्रयुक्तानि सन्ति।**

२.११. एतेषां वाक्यानां वचनपरिवर्तनं कुर्वन्तु —

**यथा -** *बालिका विद्यालयं गतवती ।*
*बालिकाः विद्यालयं गतवत्यः ।*

१. महिला श्लोकं रचितवती ।

२. एषा गीतं गीतवती ।

३. भगिनी पत्रं प्रेषितवती ।

४. न्यायवादिनी वादं कृतवती ।

५. अधिकारिणी सूचनाः दत्तवती ।

६. एषा चोरं निन्दितवती ।

७. भवती चायं पीतवती ।

८. अहं तस्य विचारं न इष्टवती ।

९. सा वार्तापत्रिकां पठितवती ।

१०. अम्बा शिशुम् उन्नीतवती ।

२.१२. आवरणे दत्तस्य क्रियापदस्य उचितं भूतकृदन्तरूपं वदन्तु —

(अ) पुंल्लिङ्गे

**यथा →** *रामः सङ्गीतं -------- (शृणोति)*
*रामःसङ्गीतं श्रुतवान् ।*

१. विज्ञानी नूतनं संशोधनं ------- (करोति)

२. जनाः उत्सवम् ---------- (आचरन्ति)

३. कलाकारः पारितोषिकं --------- (प्राप्नोति)

४. दुष्टाः सर्वान् ---------- (निन्दन्ति)
५. प्रधानमन्त्री सचिवैः ----------- (मिलति)
६. ते देवं ------------- (पूजयन्ति)
७. सः नूतनां घटीं -------------- (धरति)
८. ग्राहकाः वस्तूनि ------------- (क्रीणन्ति)
९. एषा भूमिं ------------- (मार्जयति)
१०. कविः स्वरचितं ग्रन्थं ------------ (प्रकाशयति)

२.१३.

## (आ) स्त्रीलिङ्गे

यथा - *पङ्कजा दुर्गां ------------ (पूजयति)*
*पङ्कजा दुर्गां पूजितवती ।*

१. विमला विषयं ------------- (जानाति)
२. महिलाः विहारार्थं ------------ (गच्छन्ति)
३. भगिन्यः तस्य विचारं ------------ (अङ्गीकुर्वन्ति)
४. वत्सला गुरुं प्रश्नं -------------- (पृच्छति)
५. बालिकाः विद्यालयतः ----------- (प्रत्यागच्छन्ति)
६. राधिका संस्कृतपत्रिकां ------------- (पठति)
७. महिलाः धनं -------------- (सङ्गृह्णन्ति)
८. लीलावती शास्त्रस्य अध्ययनं ------------- (करोति)
९. मातरः शिशून् --------------- (लालयन्ति)
१०. अम्बा दीपं --------------- (ज्वालयति)

२.१४.

| रमेशः | | राधा | |
|---|---|---|---|
| १. | अद्य अहं ६.०० वादने उत्थितवान् । | १. | अद्य अहं ६.३० वादने उत्थितवती । |
| २. | ६.०० वादने स्नानं कृतवान् । | २. | ६.०० वादने स्नानं कृतवती । |
| ३. | उपाहारानन्तरं विद्यालयं गतवान् । | ३. | उपाहारानन्तरं ग्रन्थालयं गतवती । |
| ४. | पाठं पठितवान् । | ४. | ततः पुस्तकानि आनीतवती । |
| ५. | सायङ्काले मित्रेण सह क्रीडितवान् । | ५. | सायङ्काले सख्या मिलितवती । |

२.१५. रमेशस्य राधायाः च अद्यतन-कार्याणां पट्टिका अत्र अस्ति । अद्य भवान् / भवती यानि यानि कार्याणि कृतवान्/कृतवती तानि तानि एतेन क्रमेण वदतु ।

२.१६. अद्य भवतः पिता/ भ्राता यानि यानि कार्याणि कृतवान् तानि तानि एतेन क्रमेण वदतु ।

**यथा** - *अद्य मम पिता ६.०० वादने उत्थितवान् ।*

भूतकृदन्तानां लङ्लकारस्य रूपाणां च अर्थे यद्यपि शास्त्रीयः भेदः अस्ति, तथापि व्यावहारिकप्रयोगे तयोः अविशेषेण प्रयोगः क्रियते ।

२.१७. भूतकृदन्तानां स्थाने लङ्लकाररूपाणां प्रयोगं कुर्वन्तु —

यथा - *बालकः कन्दुकेन क्रीडितवान् ।*
*बालकः कन्दुकेन अक्रीडत् ।*

१. अहं चायं पीतवान् ।
२. सुषमा नृत्याभ्यासं कृतवाती ।
३. मुकुन्दराजः ग्रन्थं रचितवान् ।
४. एते शिलाखण्डान् क्षिप्तवन्तः ।
५. ते युतकं धृतवन्तः ।
६. अहं दूरदर्शने चलनचित्रं दृष्टवान् ।
७. सः मातुलाय पत्रं लिखितवान् ।
८. अहं सङ्गीतं श्रुतवान् ।
९. एते विदूषकं दृष्ट्वा हसितवन्तः ।
१०. वयं विपणिं गतवन्तः ।

२.१८. लङ्लकारान्तरूपाणां स्थाने भूतकृदन्तानां प्रयोगं करोतु —

यथा - *प्रकाशः कार्यालयम् अगच्छत् ।*
*प्रकाशः कार्यालयं गतवान् ।*

१. सन्ध्या कन्याकुमारीम् अगच्छत् ।
२. सभायां स्थिताः सभ्याः करताडनम् अकुर्वन् ।
३. महिलाः गीतानि अलिखन् ।
४. एते गीतगोविन्दकाव्यम् अपठन् ।
५. अहम् अद्य गृहे एव अतिष्ठम् ।

६. भवन्तः स्तोत्रम् उच्चैः अगायन् ।
७. अरविन्दः कन्दुकम् अगृह्णात् ।
८. एताः उत्तमानि वाक्यानि अवदन् ।
९. वयम् आचार्यस्य हितवचनम् अस्मराम ।
१०. सैनिकाः देशम् अरक्षन् ।

२.१९. **दिवाकरस्य अद्यतनदिनचर्या अत्र लिखिता अस्ति ।**

दिवाकरः अद्य प्रातः ६.०० वादने **उत्थितवान्** ।
८.०० वादने सः स्नानं **कृतवान्** । अनन्तरं पानीयं **पीतवान्** ।
१०.०० वादने सः कार्यालयं **गतवान्** ।
तत्र कार्यं **कृतवान्** । व्यवहारसम्बन्धीनि पत्राणि **लिखितवान्** ।
अनन्तरं तानि पत्राणि **प्रेषितवान्** ।
तदा पत्रवितारकः आगत्य पत्राणि **दत्तवान्** ।

दिवाकरः तानि पत्राणि **पठितवान्** ।
' किम् उत्तरं लिखामि ?' इति **चिन्तितवान्** ।
अनन्तरम् उत्तरं श्वः लेखिष्यामि इति **निर्णीतवान्** ।
सायङ्काले गृहम् **आगतवान्** ।
विपणिं गत्वा तत्र वस्तूनि **क्रीतवान्** ।
रात्रौ आकाशवाणीवार्तां **श्रुतवान्** । किन्तु दूरदर्शनं न **दृष्टवान्** ।
१०.०० वादने निद्रां **कृतवान्** ।

२.२०. **अत्र कानिचन वाक्यानि लिखितानि सन्ति । तेषु प्रतिवाक्यं नूतनं वाक्यद्वयं वदन्तु -**

**यथा** - *दिवाकरः प्रतिदिनं ८.०० वादने उत्तिष्ठति ।*

*१. - दिवाकरः अद्य ८.०० वादने उत्थितवान् वा ?*
*- न । दिवाकरः अद्य ६.०० वादने उत्थितवान् ।*

१. दिवाकरः प्रतिदिनं ८.०० वादने स्नानं करोति ।

२. दिवाकरः प्रतिदिनं ८.३० वादने उपाहारं स्वीकरोति ।

३. सः प्रतिदिनं कार्यालयकार्यं करोति ।

४. सः प्रतिदिनं व्यवहारसम्बन्धीनि पत्राणि लिखति ।

५. पत्रवितारकः प्रतिदिनं पत्राणि ददाति ।

६. दिवाकरः प्रतिदिनं विपणिं गच्छति ।

७. प्रतिदिनं मित्रैः मिलति ।

८. सः प्रतिदिनं ध्यानं करोति ।

९. दिवाकरः प्रतिदिनं क्रीडति ।

१०. सः प्रतिदिनं दूरदर्शनं पश्यति ।

२.२१. आवरणे विद्यमानेषु शब्देषु उचितं शब्दं रिक्तस्थाने लिखतु —

यथा - *बालिकाः विद्यालयं --------- (गतवन्तः, गतवत्यः, गतवती)*

*बालिकाः विद्यालयं गतवत्यः ।*

१. कर्मकराः कार्याणि -------- (कृतवत्यः, कृतवन्तः, कृतवान्)

२. भगिन्यः पत्राणि -------- (लिखितवती, लिखितवत्यः, लिखितवन्तः)

३. गुरुः प्रश्नं --------- (पृष्टवान्, पृष्टवन्तः, पृष्टवत्यः)

४. अहं वित्तकोषतः धनम् ------- (आनीतवन्तः, आनीतवत्यः, आनीतवान्)

५. महिलाः मालाः ------- (रचितवन्तः, रचितवत्यः, रचितवती)

६. राष्ट्राध्यक्षः आज्ञां --- (प्रेषितवन्तः, प्रेषितवान्, प्रेषितवत्यः)

७. कः अपि विषयं न ------ (ज्ञातवान्, ज्ञातवन्तः, ज्ञातवत्यः)

८. सर्वे जनाः फलानि -------- (खादितवत्यः, खादितवन्तः, खादितवान्)

९. निर्देशकमहोदयः सर्वान् ------- (सूचितवन्तः, सूचितवान्, सूचितवत्यः)

१०. बालिकाः पुस्तकानि ------- (गृहीतवत्यः, गृहीतवती, गृहीतवन्तः)

२.२२. आवरणे विद्यमानेषु त्रिषु रूपेषु शुद्धरूपं रिक्ते स्थाने लिखन्तु —

यथा - *छात्रः प्रश्नं --------- (पृच्छितवान् पृष्टवान्, प्रष्टवान्)*
*छात्रः प्रश्नं - पृष्टवान् ।*

१) निर्मला गीतं ------- (श्रुतवती, शृणुतवती, शृतवती)

२) प्रधानमन्त्री विदेशं ----- (गच्छितवान्, गतवान्, गच्छवान्)

३) यमुना मातामहस्य गृहे ------ (स्थितवती, तिष्ठितवती, तिष्ठवती)

४) बालकः कन्दुकं ----- (गृह्णीतवान्, गृहीतवान्, ग्रहितवान्)

५) अग्रजः शाकानि ------ (क्रीतवान्, क्रीणितवान्, क्रीणीतवान्)

६) शिशुः उच्चैः ----- (रोदितवान्, रुदितवान्, रोदयितवान्)

७) सुधाकरः चलनचित्रं ----- (पश्यितवान्, पश्यवान्, दृष्टवान्)

८) पार्वती मधुरम् ------(इष्टवती, इच्छितवती, इच्छवती)

९) गायत्री संस्कृतभाषां ------- (जानीतवती, ज्ञातवती, जातवती)

१०) गायकः गीतं ------- (गीतवान्, गातवान्, गायवान्)

२.२३. माधवः रमेशस्य स्नेहितः। सः प्रवासतः इदानीमेव प्रत्यागतः अस्ति। रमेशः प्रवासविषये माधवम् एवं विवरणं पृच्छति -

यथा - *वासः (वसति)* - भवान् कुत्र उषितवान् ?

आत्मानं रमेशं मत्वा एतेषां शब्दानां साहाय्येन माधवं प्रश्नं पृच्छतु —

१. वस्तूनि - (नयति) - भवान् कानि कानि वस्तूनि नीतवान् ?
२. स्थलानि - (पश्यति) ———————— ?
३. पानीयम् - (पिबति) ———————— ?
४. नूतनविषयः - (जानाति)———————— ?
५. वस्तूनि - (क्रीणाति) ———————— ?
६. पत्रिकाः - (पठति) ———————— ?
७. मित्राणि - (मिलति) ———————— ?
८. कष्टानि - (अनुभवति) ———————— ?
९. अनुभवाः - (प्राप्नोति) ———————— ?
१०. चित्राणि - (सङ्गृह्णाति) ———————— ?

२.२४.

| | | | |
|---|---|---|---|
| रामचन्द्रः<br><br>मनोरमा | प्रातःकाले<br>ह्यः<br>परह्यः<br>गतसप्ताहे<br>गतवर्षे | देहलीं<br>पत्रं<br>कार्यं | गतवान्<br>प्रेषितवती<br>लिखितवान्<br>दृष्टवती<br>कृतवान् |

एतेषां साहाय्येन ३० अधिकानि वाक्यानि रचयतु।

# ३. भविष्यत्कालः

## ३.१. नष्टः पिष्टघटः

कस्मिंश्चित् नगरे कश्चन दरिद्रः ब्राह्मणः वसति स्म । सः भिक्षाटनेन जीवनं करोति स्म । कदाचित् सः पिष्टेन पूर्णम् एकं घटं प्राप्तवान् । तं घटं नागदन्ते अवलम्ब्य तस्य अधः उपविश्य सः एकदृष्ट्या घटमेव पश्यति स्म ।

एकदा रात्रौ सः चिन्तितवान् - 'यदि देशे दुर्भिक्षः भवेत् तर्हि एतस्य शतरूप्यकाणां मूल्यं **भविष्यति** । तदा अहम् एतत् विक्रीय तेन धनेन अजद्वयं **क्रेष्यामि**। कालान्तरे तेन अजसमूहः एव **भविष्यति**। अजसमूहं विक्रीय धेनूः **क्रेष्यामि**। ताः अपि विक्रीय यथेष्टं धनं **सम्पादयिष्यामि**। वृहत् गृहं **निर्मापयिष्यामि**। तदा कश्चित् ब्राह्मणः आगत्य रूपवतीं स्वकन्यां मह्यं **दास्यति**। अनन्तरं मम पुत्रः **जनिष्यति**। देवशर्मा इति नामकरणं **करिष्यामि**। यदा सः जानुभ्यां चलितुं समर्थः **भविष्यति** तदा अहम् अश्वशालायां पुस्तकं **पठिष्यामि**। तदा देवशर्मा जानुभ्यां चलन् मम समीपम् आगन्तुम् उद्युक्तः **भविष्यति**। तदा तं बालं ग्रहीतुं तस्य मातरम् **आज्ञापयिष्यामि**। यदा सा मम वचनं न **श्रोष्यति**, तदा अहं कोपेन पादप्रहारेण तां **दण्डयिष्यामि**' ईति एवं चिन्तयन् सः पादप्रहारं कृतवान् एव । पिष्टेन पूर्णः घटः पतितः भग्नः च ।

**क्रियापदानां भविष्यत्कालरूपाणि अत्र सन्ति।**

**३.२. २१ तमे शतके किं किं भविष्यति इति चिन्तयित्वा १० वाक्यानि वदतु -**

**यथा** - *१) २१ तमे शतके जलस्य अभावः भविष्यति ।*

३.३. यदि भवान् मुख्यमन्त्री भविष्यति तर्हि किं किं करिष्यति इति चिन्तयित्वा १० वाक्यानि वदतु -

**यथा** - १. *यदि अहं मुख्यमन्त्री भविष्यामि तर्हि उत्तमविद्याभ्यासव्यवस्थां करिष्यामि ।*

| अ | ब |
|---|---|
| बालकः पाठं पठिष्यति । | बालकाः पाठं पठिष्यन्ति । |
| शिक्षकः बोधनं करिष्यति । | शिक्षकाः बोधनं करिष्यन्ति । |
| भगिनी प्रवासार्थं गमिष्यति । | भगिन्यः प्रवासार्थं गमिष्यन्ति । |

अत्र ब-विभागे विद्यमानेषु वाक्येषु क्रियापदानां बहुवचनरूपाणि (भविष्यत्काले लृट्) प्रयुक्तानि सन्ति ।

३.४. एतेषां वाक्यानां वचनपरिवर्तनं करोतु —
(एकवचनतः बहुवचनं प्रति)

**यथा** - *वृक्षतः फलं पतिष्यति । वृक्षतः फलानि पतिष्यन्ति ।*

१. लेखकः स्वाभिप्रायं लेखिष्यति ।
२. प्रेक्षकः विदूषकं दृष्ट्वा हसिष्यति ।
३. बालकः कालान्तरे युवकः भविष्यति ।
४. चोरः सर्वं चोरयिष्यति ।
५. सिंहः मृगं खादिष्यति ।
६. दुष्टः सज्जनान् पीडयिष्यति ।
७. देवः भक्तान् रक्षिष्यति ।
८. भवान् मधुराणि खादिष्यति ।
९. एषः वस्तूनि आनेष्यति ।
१०. भवती वाक्यानि वदिष्यति ।

३.५. एतेषां वाक्यानां वचनपरिवर्तनं करोतु -
(एकवचनतः बहुवचनं प्रति & बहुवचनतः एकवचनं प्रति)

यथा - *अहम् आयुर्वेदं पठिष्यामि ।*
*वयम् आयुर्वेदं पठिष्यामः ।*

१. अहं क्रिकेट् क्रीडिष्यामि ।
२. अहं मधुरं खादिष्यामि ।
३. वयं देशसेवां करिष्यामः ।
४. अहं विदेशं गमिष्यामि ।
५. अहं कलाकारः भविष्यामि ।
६. वयं सत्यं वदिष्यामः ।
७. अहं वाहनं चालयिष्यामि ।
८. वयं चायं पास्यामः ।
९. वयं गृहार्थं नूतनवस्तूनि क्रेष्यामः ।
१०. अहं मित्रेभ्यः उपायनानि दास्यामि ।

३.६. एतेषां वाक्यानां कालपरिवर्तनं करोतु —
(वर्तमानकालतः भविष्यत्कालं प्रति)

(अ)

यथा - *रामचन्द्रः कथां शृणोति ।*
*रामचन्द्रः कथां श्रोष्यति ।*

१. बालिकाः गीतं गायन्ति ।
२. भारवहनेन स्कन्धवेदना भवति ।
३. विद्यालये कार्यक्रमाः भवन्ति ।

४. सः शीघ्रम् उत्तिष्ठति ।

५. राष्ट्राध्यक्षः शौर्यपुरस्कारं ददाति ।

६. विपक्षसदस्याः लोकसभायां सभात्यागं कुर्वन्ति ।

७. चिन्मयः परीक्षायां प्रथमस्थानं प्राप्नोति ।

८. सर्वे भारतीयाः संस्कृतं जानन्ति ।

९. सचिवः पत्रकारान् सूचयति ।

१०. पक्वानि फलानि भूमौ पतन्ति ।

(आ)

३.७. १. अहं श्वः प्रातः शीघ्रम् उत्तिष्ठामि ।

२. वयं विपणितः धान्यानि आनयामः ।

३. अहं पितामहाय पत्रं लिखामि ।

४. वयं गुरोः उपदेशं स्मरामः ।

५. अहं कदापि न पतामि ।

६. वयं कथाः कथयामः ।

७. वयं विनोदकणिकाः श्रुत्वा हसामः ।

८. अहम् असत्यं न वदामि ।

९. वयं खगोलशास्त्रस्य अध्ययनं कुर्मः ।

१०. अहं कम् अपि न निन्दामि ।

३.८. एतेषु उचितं क्रियापदम् उपयुज्य वाक्यं वदतु ।

(अ)

त्यक्ष्यति, प्रक्ष्यति, स्रक्ष्यति, ग्रहीष्यति, रोदिष्यति, उपवेक्ष्यति, स्थास्यति, शक्ष्यति, मेलिष्यति, श्रोष्यति

१. छात्रः गुरुं प्रश्नं ———— ।

२. श्रीनिवासः ग्रामं गत्वा मित्रेण ———— ।

३. लता श्वः शास्त्रीयसङ्गीतं ———— ।

४. पतति चेत् शिशुः उच्चैः ———— ।

५. मल्लः अन्यं पराजेतुं ———— ।

६. अतिथयः मम गृहे एव ———— ।

७. सुन्देशः श्वः उन्नते आसने ———— ।

८. अस्वस्थः अहारं न ———— ।

९. मुग्धः कुतूहलेन दूरदर्शनं ———— ।

१०. इदानीं मासानन्तरं वा दूर्जनः अपि दुरभ्यासं ———— ।

(आ)

३.९. **प्रवेक्ष्यामि, दास्यामि, प्रक्ष्यामः पास्यामि, द्राक्ष्यामः, आह्वास्यामि, स्थास्यामि, प्रवेक्ष्यामः, श्रोष्यामः, शक्ष्यामि।**

१. वयं परश्वः नूतनं गृहं ———— ।

२. भवतः आगमनपर्यन्तम् अहम् अत्रैव ———— ।

३. भवान् शीघ्रं न प्रत्यागच्छति चेत् अहम् अग्नि ———— इति भरतः रामम् उक्तवान् ।

४. अहं सायङ्काले चायं ———— ।

५. मम जन्मदिने सर्वाणि मित्राणि ———— ।

६. अहं समाजकार्यार्थं धनं समयं च ———— ।

७. वयं कदा काशीविश्वनाथमन्दिरं ———— ?

८. आगच्छतु मित्र ! वयं मिलित्वा सङ्गीतं ———— ।

९. एतद्विषये विवरणार्थं वयम् आचार्यं एव———— ।

१०. अहं शीघ्रमेव मृदङ्गं वादयितुं ——— ।

## ३.१०. आवरणे विद्यमानेषु त्रिषु एतेषु शुद्धं रूपं रिक्ते स्थाने लिखतु —

**यथा -** *नागराजः हिमालयं ------- (पश्यिष्यति, पश्यति, द्रक्ष्यति)*

*नागराजः हिमालयं द्रक्ष्यति ।*

१. पतितः शिशुः —— (रुदिष्यति, रोदिष्यति, रोत्स्यति)

२. कविः काव्यं —- (लिखिष्यति, लिखिस्यति, लेखिष्यति)

३. वयं चायं ——- (पास्यामः, पिबिष्यामः, पिबास्यामः)

४. अहं हिन्दीभाषां ——— (ज्ञाप्यामि, जानिष्यामि, ज्ञास्यामि)

५. भगिनी नूतनवस्त्रं ———— (क्रिणिष्यति, क्रेष्यति, क्रीष्यति)

६. भवान् स्यूतं ददातु, अहं ——— (ग्रहिष्यामि, ग्रहीष्यामि, गृह्णीष्यामि)

७. सः प्रवाससन्दर्भे यानपेटिकां ———— (नेष्यति, नयिष्यति, नष्यति)

८. अहं बान्धवान्——— (आह्वयिष्यामि, आह्वास्यामि, आह्वाष्यामि)

९. ते सर्वं कार्यं कर्तुं ——— (शक्नुष्यन्ति, शक्निष्यन्ति, शक्ष्यन्ति)

१०. वयं परश्वः अत्रैव —— —(मेलिष्यामः, मिलिष्यामः, मिल्ष्यामः)

३. ११

| | | | |
|---|---|---|---|
| अहं<br><br>सः | श्वः<br>परश्वः<br>प्रपरश्वः<br>आगामिसप्ताहे<br>आगामिमासे<br>आगामिवर्षे | पुस्तकं<br>पत्रिकां | पठिष्यति<br>लेखिष्यामि<br>क्रेष्यति |

एतस्य कोष्टकस्य साहाय्येन ३० वाक्यानि रचयतु ।

३.१२. (अ) मोहनः स्व-भाविजीवनस्य योजनाम् एवं कर्तुमिच्छति । तद्विषये

सः किं किं चिन्तयति इति वदतु ।

उदा -

१. स्नातकोत्तर - पदवीप्राप्तिः अहं प्रथमं स्नातकोत्तरपदवीं प्राप्स्यामि ।

२. विद्यालयत्यागः । तदा अहं विद्यालयं त्यक्ष्यामि ।

३. उद्योगप्राप्तिः ------------------------------------ ।

४. परिणयः ------------------------------------ ।

५. निवेशनक्रयणम् ------------------------------------ ।

६. गृहनिर्माणम् ------------------------------------ ।

७. गृहप्रवेशः ------------------------------------ --- ।

८. विदेशगमनम् ------------------------------------ ।

९. ततः प्रत्यागमनम् ------------------------------------ ।

१०. उद्योगत्यागः ---------------------------------------- ।

११. निर्वाचने भागग्रहणम् ---------------------------------- ।

१२. मुख्यमन्त्रित्व-स्वीकरणम् ---------------------------- ।

१३. जनसमस्या-परिहारः ---------------------------------- ।

**३.१३. (आ) एतेषु वाक्येषु सर्वत्र 'अहम्' इति स्थाने 'मोहनः' इति शब्दं योजयित्वा वाक्यानि पुनः वदतु -**

**यथा -** *मोहनः प्रथमं स्नातकोत्तरपदवीं प्राप्स्यति ।*
*तदा सः विद्यालयं त्यक्ष्यति ।*




**३.१४. एते गृहसदस्याः इदानीं प्रवासार्थं प्रस्थिताः सन्ति । तेषां सम्भाषणं पठतु ।**

चेतनः — वयं सायङ्काले कन्याकुमारीं **प्राप्स्यामः** । प्रथमं समुद्रतीरं गत्वा सूर्यास्तं **द्रक्ष्यामः** । अनन्तरं देवालयं **गमिष्यामः** । तत्र देव्याः दर्शनं **करिष्यामः** ।

पङ्कजा — वयं कुत्र **निवत्स्यामः** ?

चेतनः — देवालयसमीपे प्रवासिमन्दिरम् अस्ति । तत्र **निवत्स्यामः** ।

पिता — भोजनव्यवस्था कथम् ?

चेतनः — तत्र अनेके भोजनालयाः सन्ति । तत्र **गमिष्यामः** । अथवा प्रथमम् एव खाद्यानि **क्रेष्यामः** । तानि प्रवासिमन्दिरं **नेष्यामः** । तत्र **खादिष्यामः** । रात्रौ तत्रैव स्थित्वा प्रातः **प्रत्यागमिष्यामः** ।

**३.१५. भवान् एव गृहप्रमुखः सन् गृहसदस्यान् उद्दिश्य एकां प्रवासयोजनां वदतु ।**

**यथा** - *वयं प्रातः ६-०० वादने गृहतः प्रस्थानं करिष्यामः । - इत्यादिक्रमेण ।*

**३.१६. आवरणे विद्यमानस्य शब्दस्य साहाय्येन एतेषां वाक्यानां परिवर्तनं करोतु -**

यथा - *गतभानुवासरे सः चलनचित्रं न दृष्टवान् (आगामिभानुवासरे)*
*आगामिभानुवासरे सः चलनचित्रं द्रक्ष्यति ।*

१. ह्यः सा आपणं गतवती ।( श्वः अपि)
२. जनवरीमासे सः वाराणसीं गतवान् । (एप्रिल्, कल्कत्ता)
३. गतमासे सः वस्त्रं क्रीतवान् । (आगामिमासे पादरक्षा)

४. दिनेशः अद्य एकं पत्रं लिखितवान् । (श्वः अपि)
५. एतस्यां क्रीडायां वयं जयं प्राप्तवन्तः । (अन्यक्रीडा)
६. इदानीं विन्ध्यपर्वतं दृष्टवन्तः । (इतः परं, हिमालयः)
७. ते किञ्चित् धनं दत्तवन्तः । अनन्तरम् (अधिकं धनं)
८. ते प्रातःकाले अल्पमेव खादितवन्तः । (रात्रौ अधिकं)
९. सा एकस्मिन् चित्रे अभिनीतवती ।(इतः परम् त्रीणि चित्राणि)
१०. सः स्कूटर्यानं चालितवान् । (कार्यानम्)

**३.१७. एतेषां प्रश्नानाम् उत्तरं वदतु -**

**यथा** - *भवान् नगरं गमिष्यति वा ?*
*आम्, अहं नगरं गमिष्यामि ।*

१. भवान्/भवती श्वः पुस्तकं क्रेष्यति वा ?
२. भवान्/भवती सायङ्काले नाटकं द्रक्ष्यति वा ?
३. भवान्/भवती हिन्दुस्तानी-सङ्गीतं श्रोष्यति वा ?
४. भवान्/भवती प्रश्नं प्रक्ष्यति वा ?
५. भवान्/भवती निश्चयेन सूचयिष्यति वा ?
६. भवान्/भवती प्रवासार्थम् अनुजम् अपि नेष्यति वा ?
७. भवान्/भवती हैदराबादनगरे मित्रस्य गृहे निवत्स्यति वा ?
८. भवान्/भवती सर्वाणि वस्तूनि आनेष्यति वा ?
९. भवान्/भवती उद्योगं त्यक्ष्यति वा ?
१०. भवान्/भवती साहाय्यं करिष्यति वा ?

**३.१८. एतेषाम् उत्तराणां प्रश्नवाक्यानि वदतु -**

**यथा** - *आम्, अहं परश्वः देहलीं गमिष्यामि ।*
*भवान् परश्वः देहलीं गमिष्यति वा ?*

१. आम्, अहं मासाभ्यन्तरे १०० पुस्तकानि विक्रेतुं शक्ष्यामि ।
२. न, अहम् अद्य नूतनं वस्त्रं न क्रेष्यामि ।
३. आम्, वयं श्वः चलनचित्रं द्रक्ष्यामः ।
४. न, अहं न रोदिष्यामि ।
५. आम्, वयं पानकं पास्यामः ।
६. आम्, अहं सर्वाणि मित्राणि आह्वास्यामि ।
७. न, सर्वाणि वस्तूनि वयमेव न ग्रहीष्यामः ।
८. आम्, समग्रं व्ययं वयमेव दास्यामः ।
९. आम्, अहम् अत्र एव स्थास्यामि ।
१०. न, अहं तद्विषये न चिन्तयिष्यामि ।

**३.१७. एतानि वाक्यानि पठित्वा आवरणे विद्यमानस्य शब्दस्य साहाय्येन उचितम् उत्तरं वदतु -**

यथा - *कृपया आगच्छतु । (श्वः)*
*अस्तु, अहं श्वः आगमिष्यामि ।*

१. भवान् भोजनं करोतु । (अनन्तरम्)
२. भवती पत्रं लिखतु । (परश्वः)
३. भवान् कृपया मा चिन्तयतु । (इतः परम्)
४. भवती धनं प्रेषयतु । (शीघ्रमेव)
५. भवान् विषयं सूचयतु । (श्वः)
६. भवती निश्चिन्ता भवतु । (इतः परम्)
७. भवान् शुल्कं ददातु । (मध्याह्ने)
८. भवती पुस्तकं प्रेषयतु । (सायङ्काले)
९. भवान् अवश्यं नाटकं पश्यतु । (भानुवासरे)
१०. भवान् वस्तूनि आनयतु । (आगमनसमये)

# उत्तराणि

१.२. १. चित्रकाराः लिखन्ति । २. युवकाः गच्छन्ति । ३. बालकाः धावन्ति ।
४. मार्जालाः पिबन्ति । ५. वृद्धाः पश्यन्ति । ६. पुरुषाः उत्तिष्ठन्ति ।
७. गायकाः गायन्ति । ८. उन्मत्ताः हसन्ति । ९. बालिकाः क्रीडन्ति ।
१०. महिलाः प्रक्षालयन्ति ।११. वृद्धाः खादन्ति ।

१.३. १. अहं लिखामि । २. अहं गच्छामि - इत्यादयः ।

१.४. १. न, अहं न पतामि । २. न, अहं पेटिकां न नयामि ।
३. आम्, अहं प्रश्नं पृच्छामि । ४. आम्, अहं संस्कृतं जानामि ।
५. आम्, अहं योगासनं करोमि । ६. न, अहं चित्रगीतं न शृणोमि ।
७. न, अहं लेखनीं न ददामि । ८. आम्, अहं मधुरम् इच्छामि ।
९. न, अहम् आसन्दे न उपविशामि । १०. आम्, अहं नूतनं वाहनं क्रीणामि ।

१.५. १. भवन्तः/भवत्यः महामस्तकाभिषेकार्थं गच्छन्ति वा ?
२. भवन्तः/भवत्यः गृहपाठं लिखन्ति वा ? ३. भवन्तः/भवत्यः अद्य अत्र तिष्ठन्ति वा ? ४. भवन्तः/भवत्यः प्रतिदिनं कार्याणि कुर्वन्ति वा ?
५. भवन्तः/भवत्यः प्रातःकाले दूरदर्शनं पश्यन्ति वा ? ६. भवन्तः/भवत्यः कथाः पठन्ति वा ? ७. भवन्तः/भवत्यः सम्यक् स्मरन्ति वा ?
८. भवन्तः/भवत्यः भरतनाट्यम् इच्छन्ति वा ? ९. भवन्तः/भवत्यः तन्त्रीवार्तां प्रेषयन्ति वा ?१०. भवन्तः/ भवत्यः अधिकं कटु खादन्ति वा ?

१.६. १. कुर्वन्ति । २. क्रीणीमः । ३. शृण्वन्ति । ४. प्राप्नुमः । ५. गृह्णन्ति ।
६. कुर्मः । ७. ददति । ८. शक्नुमः । ९. रुदन्ति । १०. शक्नुमः ।

१.७. १. कुर्मः । २. प्राप्नुवन्ति । ३. शृणुमः । ४. गृह्णीमः । ५. शक्नुवन्ति ।
६. दद्मः । ७. शृण्वन्ति । ८. रुदिमः । ९. प्राप्नुमः । १०. गृह्णन्ति ।

२.२. १. अगायत् । २. अवदत् । ३. अलिखत् । ४. अकरोत् ।
५. अखादत् । ६. अयच्छत् । ७. अक्रीडत् । ८. अक्षिपत् ।
९. अहसत् ।१०. अपश्यत् ।

२.३. १) एते उच्चैः अहसन्। २) ते नाटकम् अपश्यन्।
३) महिलाः आभरणम् अधरन्। ४) सैनिकाः देशम् अरक्षन्।
५) भवन्तः कार्याणि अकुर्वन्। ६) भवत्यः विषयम् असूचयन्।
७) बालकाः मार्गे अपतन्। ८) कर्मकराः पेटिकाम् अनयन्।
९) भक्ताः देवम् अनमन्। १०) अश्वाः शीघ्रम् अधावन्।

२.४ १) वयं श्लोकम् अवदाम। २) वयं फलरसम् अपिबाम।
३) वयं विपणिम् अगच्छाम। ४) अहं हिमालयम् अपश्यम्।
५) वयं नदीम् अतराम। ६) वयं किमपि न अचोरयाम।
७) अहं धनम् अगणयम्। ८) वयं मित्राय पत्रम् अलिखाम।
९) वयं गृहं प्रति वस्तूनि अनयाम। १०) अहं क्रीडाङ्गणे अक्रीडम्।

२.६ १) अहं ग्रामम् अगच्छम्। २) अहं तत्र मातुलस्य गृहे अवसम्।
३) अहं बान्धवैः अमिलम्। ४) सर्वैः बालकैः सह अक्रीडम्।
५) अहं ग्रामपार्श्वे विद्यमानां नदीम् अपश्यम्। ६) नद्याः जलम् अपिबम्। ७) मित्रैः सह नदीम् अतरम्। ८) अनेकविधानि फलानि अखादम्। ९) अत्यन्तं सन्तोषेण कालम् अनयम्।१०) मासान्ते नगरम् प्रत्यागच्छम्।११) अनन्तरं मातुलाय पत्रम् अलिखम्।

२.९. १) शिक्षकाः गृहपाठं लिखितवन्तः। २)पण्डिताः ग्रन्थं परिशीलितवन्तः। ३) एते बन्धवान् आमन्त्रितवन्तः। ४) ते पत्रं प्रेषितवन्तः। ५) भवन्तः संस्कृतं ज्ञातवन्तः। ६) नटाः जनानां मनः आकृष्टवन्तः। ७) वानराः फलं खादितवन्तः। ८) वयं विषयं स्मृतवन्तः। ९) प्रवाचकाः वार्तां पठितवन्तः। १०) चित्रकाराः चित्रं दर्शितवन्तः।

२.११. १) महिलाः श्लोकं रचितवत्यः। २) एताः गीतं गीतवत्यः।
३) भगिन्यः पत्रं प्रेषितवत्यः। ४) न्यायवादिन्यः वादं कृतवत्यः।
५) अधिकरिण्यः सूचनाः दत्तवत्यः। ६) ताः चोरं निन्दितवत्यः।
७) भवत्यः चायं पीतवत्यः। ८) वयं तस्य विचारम् इष्टवत्यः।
९) ताः वार्तापत्रिकां पठितवत्यः।१०) अम्बाः शिशुम् उन्नीतवत्यः।

२.१२. १) कृतवान् । २) प्राप्तवान् ।३) मिलितवान् । ४) आचरितवन्तः ।
५) निन्दितवन्तः । ६) धृतवान् । ७) मार्जितवती । ८) पूजितवन्तः ।
९) क्रीतवन्तः । १०) प्रकाशितवान् ।

२.१३. १) ज्ञातवती । २) गतवत्यः । ३) अङ्गीकृतवत्यः ।
४) पृष्टवती । ५) प्रत्यागतवत्यः ।६) पठितवती ।
७) सङ्गृहीतवत्यः । ८) कृतवती । ९) लालितवत्यः ।
१०) ज्वालितवती ।

२.१७. १) अपिबम् । २) अकरोत् । ३) अरचयत् ।
४) अक्षिपन् । ५) अधरन् । ६) अपश्यम् ।
७) अलिखत् । ८) अशृणोत् । ९) अहसन् ।
१०) अगच्छाम ।

२.१८. १) गतवान् । २) कृतवन्तः । ३) लिखितवत्यः ।
४) पठितवन्तः । ५) स्थितवान्/वती । ६) गीतवन्तः ।
७) गृहीतवान् । ८) उक्तवत्यः । ९) स्मृतवन्तः/वत्यः ।
१०) रक्षितवन्तः ।

२.२१. १) कृतवन्तः । २) लिखितवत्यः । ३) पृष्टवान् ।
४) आनीतवान् । ५) रचितवत्यः । ६) प्रेपितवान् ।
७) ज्ञातवान् । ८) खादितवन्तः । ९) सूचितवान् ।
१०) गृहीतवत्यः ।

२.२२. १) श्रुतवती । २) गतवान् । ३) स्थितवती ।
४) गृहीतवान् । ५) क्रीतवान् । ६) रुदितवान् ।
७) दृष्टवान् । ८) इष्टवती ९) ज्ञातवती ।
१०) गीतवान् ।

२.२३. १) नीतवान् । २) दृष्टवान् । ३) पीतवान् ।
४) ज्ञातवान् । ५) क्रीतवान् । ६) पठितवान् ।
७) मिलितवान् । ८) अनुभूतवान् । ९) प्राप्तवान् ।
१०) सङ्गृहीतवान् ।

३.४. १) लेखकाः स्वाभिप्रायं लेखिष्यन्ति ।
२) प्रेक्षकाः विदूषकं दृष्ट्वा हसिष्यन्ति ।
३) बालकाः कालान्तरे युवकाः भविष्यन्ति ।
४) चोराः सर्वं चोरयिष्यन्ति ।
५) सिंहाः मृगं खादिष्यन्ति ।
६) दुष्टाः सज्जनान् पीडयिष्यन्ति ।
७) देवाः भक्तान् रक्षिष्यन्ति ।
८) भवन्तः मधुराणि खादिष्यन्ति ।
९) एते वस्तूनि आनेष्यन्ति ।
१०) भवत्यः वाक्यानि वदिष्यन्ति ।

३.५. १) वयं क्रिकेट् क्रीडिष्यामः । २) वयं मधुरं खादिष्यामः ।
३) अहं देशसेवां करिष्यामि । ४) वयं विदेशं गमिष्यामः ।
५) वयं कलाकाराः भविष्यामः । ६) अहं सत्यं वदिष्यामि ।
७) वयं वाहनं चालयिष्यामः । ८) अहं चायं पास्यामि ।
९) अहं गृहार्थं नूतनवस्तूनि क्रेष्यामि ।
१०) वयं मित्रेभ्यः उपायनानि दास्यामः ।

३.६. १) बालिकाः गीतं गास्यन्ति ।
२) भारवहनेन स्कन्धवेदना भविष्यति ।
३) विद्यालये कार्यक्रमाः भविष्यन्ति ।
४) सः शीघ्रम् उत्थास्यति ।
५) राष्ट्राध्यक्षः शौर्यपुरस्कारं दास्यति ।
६) विपक्षसदस्याः लोकसभायां सभात्यागं करिष्यति ।
७) चिन्मयः परीक्षायां प्रथमस्थानं प्राप्स्यति ।
८) सर्वे भारतीयाः संस्कृतं [illegible]न्ति ।
९) सचिवः पत्रकारान् सूचयिष्यति ।
१०) पक्वानि फलानि भूमौ पतिष्यन्ति ।

३.७. १) उत्थास्यमि । २) आनेष्यामः । ३) लेखिष्यामि ।
४) स्मरिष्यामः । ५) पतिष्यामि । ६) कथयिष्यामः ।

७) हसिष्यामः। ८) वदिष्यामः। ९) करिष्यामः।
१०) निन्दिष्यामः।

३.८. (अ) १) प्रक्ष्यति। २) मेलिष्यति। ३) श्रोष्यति। ४) रोदिष्यति। ५) शक्ष्यति ६) स्थास्यन्ति।७) उपवेक्ष्यति।८) ग्रहीष्यति। ९) स्रक्ष्यति।

३.९. (आ) १) प्रवेक्ष्यामः। २) स्थास्यामि। ३) प्रवेक्ष्यामि। ४) पास्यामि। ५) आह्वास्यामि। ६) दास्यामि। ७) द्रक्ष्यामः। ८) श्रोष्यामः। ९) प्रक्ष्यामः।१०) शक्ष्यामि।

३.१०. १) रोदिष्यति। २) लेखिष्यति। ३) पास्यामः। ४) ज्ञास्यामि।
५) क्रेष्यति। ६) ग्रहीष्यामि। ७) नेष्यति।८) आह्वास्यामि।
९) शक्ष्यन्ति।१०) मेलिष्यामः।

३.१२. १) अनन्तरम् अहम् उद्योगं प्राप्स्यामि। २) अनन्तरम् अहं परिणेष्यामि। ३) अनन्तरं निवेशनं क्रेष्यामि। ४) अनन्तरं गृहनिर्माणं करिष्यामि। ५) अनन्तरं गृहं प्रवेश्यामि। ६) अनन्तरं विदेशं गमिष्यामि। ७) अनन्तरं ततः प्रत्यागमिष्यामि। ८) अनन्तरम् उद्योगं त्यक्ष्यामि। ९) अनन्तरं निर्वाचने भागं ग्रहीष्यामि।१०) अनन्तरं मुख्यमन्त्रित्वं स्वीकरिष्यामि। ११) अनन्तरं जनसमस्याः परिहरिष्यामि।

३.१३. १) मोहनः प्रथमं स्नातकोत्तरपदवी प्राप्स्यति। २) तदा सः विद्यालयं त्यक्ष्यति। ३) अनन्तरं सः उद्योगं प्राप्स्यति। ४) अनन्तरं सः परिणेष्यति। ५) अनन्तरं सः निवेशनं क्रेष्यति। ६) अनन्तरं सः गृहनिर्माणं करिष्यति। ७) अनन्तरं सः गृहं प्रवेक्ष्यति।८) अनन्तरं सः विदेशं गमिष्यति।९) अनन्तरं सः ततः प्रत्यागमिष्यति।१०) अनन्तरं सः उद्योगं त्यक्ष्यति।११) अनन्तरं सः ग्रहीष्यति।१२) अनन्तरं सः स्वीकरिष्यति। १३) अनन्तरं सः जनसमस्याः परिहरिष्यति।

३.१६. १) गमिष्यति। २) गमिष्यति। ३) क्रेष्यति। ४) लेखिष्यति।
५) प्राप्स्यामः। ६) द्रक्ष्यामः/ द्रक्ष्यन्ति। ७) दास्यन्ति।
८) खादिष्यन्ति। ९) अभिनेष्यति।१०) चालयिष्यति।

३.१७. १) आम्, अहं श्वः पुस्तकं क्रेष्यामि । २) आम्, अहं सायङ्काले नाटकं द्रक्ष्यामि । ३) आम्, अहं हिन्दुस्तानीसङ्गीतं श्रोष्यामि । ४) आम्, अहं प्रश्नं प्रक्ष्यामि । ५) आम्, अहं निश्चयेन सूचयिष्यामि । ६) आं, प्रवासार्थम् अहम् अनुजं नेष्यामि । ७) आम्, अहं हैदराबादनगरे मित्रस्य गृहे निवत्स्यामि ।८) आम् , अहं सर्वाणि वस्तूनि आनेष्यामि । ९) न, उद्योगं न त्यक्ष्यामि । १०) आम्, अहं साहाय्यं करिष्यामि ।

३.१८. १) भवान्/ भवती मासाभ्यन्तरे १०० पुस्तकानि विक्रेतुं शक्ष्यति वा ? २) भवान्/ भवती अद्य नूतनं वस्त्रं क्रेष्यति वा ? ३) भवन्तः/ भवत्यः श्वः चलनचित्रं द्रक्ष्यन्ति वा ? ४) भवान्/ भवती रोदिष्यति वा ? ५) भवन्तः/ भवत्यः पानकं पास्यन्ति वा ? ६) भवान्/ भवती सर्वाणि मित्राणि आह्वास्यति वा ? ७) भवन्तः/ भवत्यः एव सर्वाणि वस्तूनि ग्रहीष्यन्ति वा ? ८) भवन्तः/ भवत्यः समग्रं व्ययं दास्यन्ति वा ? ९) भवान्/ भवती अत्र एव स्थास्यति वा ? १०) भवान्/ भवती तद्विषये चिन्तयिष्यति वा ?

३.१९.
१) अस्तु, अहम् अनन्तरं भोजनं करिष्यामि ।
२) अस्तु, अहं परश्वः पत्रं लेखिष्यामि ।
३) अस्तु, अहम् इतः परं न चिन्तयिष्यामि ।
४) अस्तु, अहं शीघ्रमेव धनं प्रेषयिष्यामि ।
५) अस्तु, अहं श्वः विषयं सूचयिष्यामि ।
६) अस्तु, इतः परम् अहं निश्चिन्ता भविष्यामि ।
७) अस्तु, अहं मध्याह्ने शुल्कं दास्यामि ।
८) अस्तु, अहं सायङ्काले पुस्तकं प्रेषयिष्यामि ।
९) अस्तु, अहं भानुवासरे अवश्यं नाटकं द्रक्ष्यामि ।
१०) अस्तु, अहम् आगमनसमये वस्तूनि आनेष्यामि ।

* * *